च त्वामनु' इत्यादिमन्त्रः 'पितृशब्दं न कुर्वीत' 'नमो वः पितर' इत्यादि मन्त्रं न पठेदित्यर्थः ॥

बृहस्पतिः [श्राद्ध, १२८, १३२, १३५, १३६, १३८]

एकोद्दिष्टविधानेन यद्देकस्य प्रदीयते ।
आवाहनाग्नौकरणरहितं दैववर्जितम् ॥
वस्त्रालंकारशय्याद्यं पितुर्यद्वाहनायुधम् ।
गन्धमाल्यैः समभ्यर्च्य श्राद्धभोक्त्रे तदर्पयेत् ॥
भोजनं चानेकविधं कारयेद्व्यञ्जनानि च ।
यथाशक्त्या प्रदद्याच्च गोभूहेमादिकं तथा ॥
श्रोत्रिया भोजनीयास्तु नव सप्त त्रयोदश ।
ज्ञातयो बान्धवा निःस्वास्तथा चातिथयोऽपरे ॥
प्रदद्याद्दक्षिणां तेषां सर्वेषामनुरूपतः ।
हतमश्रोत्रियं श्राद्धं हता यज्ञास्त्वदक्षिणाः ॥
तस्मात्पणं काकिणी वा फलं पुष्पमथापि वा ।
प्रदद्याद्दक्षिणां यज्ञे तया समफलो भवेत् ॥

वाराहपुराणे

एकादशाहे कर्तव्यं श्राद्धं प्रेताय यत्नतः । 188/6
श्वः करिष्य इति ज्ञात्वा ब्राह्मणामन्त्रणक्रिया ॥
स्नात्वा चैव शुचिर्भूत्वा प्रेतं विप्रेषु योजयेत् । 188/7
गतोऽसि दिव्यलोकं त्वं कृतान्तविहितात्पथः ॥
मनसा वायुभूतेन विप्रे त्वाहं नियोजये । 188/12
पूजयिष्यामि भोगेन एवं विप्रं निमन्त्रयेत् ॥
अस्तं गते तथादित्ये गत्वा विप्रनिवेशनम् । 188/13
दत्त्वा तु पाद्यं विधिवन्नमस्कृत्य द्विजोत्तमम् ॥
पादौ प्रक्षाल्य तैलेन प्रेतस्य हितकाम्यया । 188/14(i)
प्रभातायां तु शर्वर्यामुदिते च दिवाकरे ॥
श्मश्रुकर्म कारयित्वा नखच्छेदं ततः परम् । 188/16-ii

स्नपनाभ्यञ्जनं दद्याद्विप्राय विधिपूर्वकम् ॥ 100/16(iii)
गृह्णीयाद्भूमिभागं च स्थण्डिलं तदनन्तरम् ।
निवापदेशं संगृह्य कर्तव्यं स्थण्डिलं महत् ॥ 100/17
नदीकूले निवासे वा प्रेतभूमिं विनिर्दिशेत् । — 100/18(i)
अकृत्वा पृथिवीभागं निवापं ये तु कुर्वते ॥
तदधीनं जगद्भद्रे तदुच्छिष्टं कृतं भवेत् । — 100/25
न देवाः पितरस्तस्य गृह्णन्तीह कदाचन ॥
पतन्ति निरये घोरे तेनोच्छिष्टेन सुन्दरि । 100/26
सचैलस्नपनं कृत्वा गत्वा चैव महानदीम् ॥ — 100/30 ii
तीर्थानि मनसा ध्यात्वा तैः स्वमभ्युक्षयेद्बुधः ।
एवं शुद्धिं ततः कृत्वा ब्राह्मणं शीघ्रमानयेत् ॥ — 100/31
आगतं च द्विजं दृष्ट्वा कर्तव्या स्वागतक्रिया ।
अर्घ्यं पाद्यं ततः कृत्वा हृष्टतुष्टेन माधवि ॥ 100/
आसनं चोपकल्पेत मन्त्रेण विधिपूर्वकम् । — /32
अत्रासने देवतानामनुज्ञातो विश्रम्यताम् ॥ — 100/33(i)

प्रसादयेत्त्वासनं गृह्यपूतं — /33(ii)
ज्ञानाग्निशुद्धेन करेण विप्रः ।
प्रक्षाल्य पाणी शिरसाऽभिवन्द्य
जानूनि विश्राव्य च मन्त्रवच्च ॥ poet.

उपवेश्यासने भद्रे छत्रं तत्र प्रकल्पयेत् । 100/34(i)
आवरणार्थं छत्रं तद्ब्राह्मणाय प्रदीयते ॥ 100/36(ii)
पश्चादुपानहौ दद्यात् पादस्पर्शकरे उभे । 100. 41(i)
सन्तप्तवालुकां भूमिमसिकण्टकितां तथा ॥ 100. 44(i)
संतारयति दुर्गाणि प्रेतं दददुपानहौ । — 44(ii)
तिलोपचारं कृत्वा तु विप्रस्य नियतात्मना ॥ 100. 45(i)
नाम गोत्रमुदाहृत्य प्रेताय तदनन्तरम् ।
शीघ्रमाह्वानयेद्भूमिं दर्भहस्तोऽथ भूतले ॥ 100. 46

'मन्त्रः'—

इह लोकं परित्यज्य गतोऽसि परमां गतिम् ।
एवमाह्वानिते गन्धपुष्पधूपान् समर्पयेत् ॥

'गन्धमन्त्रः'—'सर्वः सुगन्धः' । 'पुष्पमन्त्रः'—'श्रिया देव्या' । 'धूपमन्त्रो' 'बृहसातिरसान्' ।

ततो वस्त्राणि विप्राय सर्वाण्याभरणानि च ।
पुनः पक्वान्नकं चैव कल्पयेच्च वसुन्धरे ॥
त्रिषु वर्णेषु कर्तव्यं पाकं भोजनमेव च ।
शुश्रूषामभिपन्नानां शूद्राणां च वरानने ॥
दिने त्रयोदशे प्राप्ते पाकेन भोजयेद्‌द्विजान् ।
एवं विधिः प्रयोक्तव्यः शूद्राणां मन्त्रवर्जितः ॥
अमन्त्रस्य च शूद्रस्य विप्रो मन्त्रेण गृह्यते ।
भुज्यमानस्य विप्रेण प्रेतभागस्य सर्वशः ॥
ज्ञातिवर्गेषु मित्रेषु सम्बन्धिस्वजनेषु च ।
भागस्तस्य प्रदातव्यो येनार्थो यस्य विद्यते ॥
शुचिर्भूत्वा तु विधिवत् कृत्वा शान्त्युदकानि च ।
प्रणम्य शिरसा देवि निवापस्थानमागतम् ॥
स्तोतव्यानि च मन्त्राणि समभक्त्या व्यवस्थितम् ।

मन्त्रः—

नमो नमो मेदिनि लोकधात्रि
उर्वि महि शैलगिरिधारिणि धरणे नमः ।
धरणि काश्यपि जगत्प्रतिष्ठे
वसुधे नमोऽस्तु वैष्णवि भूतधात्रि ॥
नमोऽस्तु ते सर्वरसप्रतिष्ठे—
निवापनावीति नमो नमोऽस्तु ते ।
दद्यात्तिलोदकं तस्य नामगोत्रमुदाहरन् ॥

संवाह्य चरणौ तस्य नमस्कृत्य द्विजोत्तमम् ।
संगृह्य पाणिना पाणिं मन्त्रेणोत्थापयेद्द्विजम् ॥
दद्याच्छय्यासनं देवि तथैवाञ्जनकाङ्कतम् ।
अञ्जनं कङ्कतं गृह्य शय्यामाक्रम्य स द्विजः ॥
मुहूर्तं तत्र विश्रम्य पावनस्थानमागतम् ॥
गवां लाङ्गूलमुद्धृत्य ब्राह्मणो हस्तमादधत् ।
पात्र औदुम्बरे तत्र कृत्वा चैव तिलोदकम् ॥
उपाहरन्ति मन्त्रेण सामवेदाद्द्विजातयः ।
मन्त्रैः पूर्वं तदा तोयं सर्वपापप्रणाशनम् ॥
गृह्य चौदुम्बरं पात्रं विप्रेण नियतात्मना ।
मन्त्रेणाभ्युक्षयेत्सर्वं स्वगृहे यत्तु तिष्ठति ॥
देवांश्चाग्निमुखान् सर्वांस्तर्पयित्वा विभागशः ।
भूतानां च बलिं दद्याद्ब्राह्मणेभ्यश्च भोजनम् ॥
प्रेतभागेन दत्तेन पूजयित्वा द्विजातयः ।
मृतस्य नामतोद्दिश्य ह्यक्षयं चोपकल्पयेत् ॥
स्वस्ति वाच्य च विप्राय दद्यात्प्रेतविसर्जनम् ।
प्राशयेत् पञ्चगव्यं च मधुपर्केण संयुतम् ॥

श्रीरामायणे[1]

समतीते दशाहे तु कृतशौचो विधानतः ।
चक्रे द्वादशिकं श्राद्धं त्रयोदशिकमेव च ॥
यानानि दासदासीश्च वेश्मानि सुमहान्ति च ।
भूषणानि च मुख्यानि राज्ञस्तस्यौर्ध्वदैहिकम् ॥

राजधर्मेषु वसिष्ठः [१९, २९-३०]

राजनि च प्रेते दद्यात् प्रासङ्गिकम् । एतेन मातापितृवृत्तिर्व्याख्याता ॥

1. Compare with the Madras Law Journal Press edition II, Lxxvii 1-3. Where the verses are cited in different language.

32

'प्रासङ्गिकं' प्रसङ्गो विषयोपभोगः, तदर्थं शय्यासनादि। 'मातापितृवृत्तिः' मातापित्रोरपि श्राद्धे प्रासङ्गिकशय्यादिदानेन वर्तितव्यमित्यर्थः ॥

विष्णुः [२०, १-११]

अथाऽऽशौचापगमे सुस्नातः सुप्रक्षालितपाणिपादः स्वाचान्तस्त्वेवंविधानेव च ब्राह्मणान् यथाशक्त्युदङ्मुखान् गन्धमाल्यवस्त्रालङ्कारादिभिः पूजितान् भोजयेत्। एकवन्मन्त्रानूहेदेकोद्दिष्टे। उच्छिष्टसन्निधावेकमेव तन्नामगोत्राभ्यां पिण्डं निर्वपेत्। भुक्तवत्सु ब्राह्मणेषु दक्षिणयाऽभिपूजितेषु प्रेतनामगोत्राभ्यां दत्ताक्षय्योदकेषु चतुरङ्गुलपृथ्वीस्तावदन्तरास्तावदधःखाता वितस्त्यायतास्तिस्रः कर्षूः कुर्यात्। कर्षूत्रयसमीपे चाग्नित्रयमुपसमाधाय परिस्तीर्य तत्रैकैकस्मिन्नाहुतित्रयं जुहुयात्। सोमाय पितृमते स्वधा नमः। अग्नये कव्यवाहनाय स्वधा नमः। यमायाङ्गिरसे स्वधा नमः। स्थानत्रये च प्राग्वत् पिण्डनिर्वपणं कुर्यात्। ततोऽन्नदधिमधुघृतमांसैः कर्षूत्रयं पूरयित्वा एतत्त इति जपेत्। एवं मृताहे प्रतिमासं कुर्यात् ॥

'एकवन्मन्त्रानूहेद्' इति, यत्र मन्त्रे बहुवचनान्तं पदं तत्रैकवचनान्तमूहनीयमित्यर्थः ॥

[1]याज्ञवल्क्यवृद्धशातातपौ

मृतेऽहनि तु कर्तव्यं प्रतिमासं तु वत्सरम्।
प्रतिसंवत्सरं चैव माघमेकादशेऽहनि ॥

'एकादशेऽहनि' इत्याशौचापगमानन्तरदिवसोपलक्षणपरम्। अथाऽऽशौचव्यपगम इति विष्णुस्मरणात् ॥

(1) १, २५६

छन्दोगपरिशिष्टे कात्यायनः[1]

श्राद्धमग्निमतः कार्यं दाहादेकादशेऽहनि ।
[2]ध्रुवाणि तु प्रकुर्वीत प्रमीताहनि सर्वदा ॥
द्वादश प्रतिमास्यानि आद्यं षाण्मासिकं तथा ।
सपिण्डीकरणं चेति[3] प्रेतश्राद्धानि षोडश ॥
एकाहेन तु षण्मासा यदा स्युरपि वा त्रिभिः ।
न्यूनाः संवत्सराच्चैव स्यातां षाण्मासिके तथा ॥

'अग्निमतो' मृतस्य । 'ध्रुवाणि' आवश्यकानि वक्ष्यमाणानि । 'संवत्सरान्न्यूना' इति सम्बन्धः ॥

ब्रह्मपुराणे

नृणां तु त्यक्तदेहानां श्राद्धाः षोडश सर्वदा ।
चतुर्थे पञ्चमे वाऽथ नवमैकादशे तथा ॥
ततो द्वादशभिर्मासैः श्राद्धा द्वादशसंख्यया ।
कर्तव्या शुचिभिस्तेषां तत्र विप्रांस्तु तर्पयेत् ॥

चतुर्थाहादिश्राद्धान्तराभावेनैकादशाहादिश्राद्धषोडशकाच्छ्राद्धषोडशकान्तरमेतत् ॥

दशदिनकृत्यसमनन्तरम्—

हारीतः

श्वोभूत एकानुद्दिष्टं प्रदाय स्वस्त्ययनादिधर्मार्थान् प्रवर्तयन्ति ॥

'एकानुद्दिष्टम्' एकस्योद्देशेन ।

(1) गोभिलस्मृतिः, ३, ६६–६८
(2) 'प्रत्याब्दिकं प्रकुर्वीत' इति आनन्दाश्रमकोशे, ६७
(3) 'चैव एतद्धि श्राद्धषोडशम्' इति तत्रैव

बैजवापः

ऊर्ध्वं दशम्यामपोऽभ्युपेत्य तस्मै श्राद्धकरणम् । गवाऽविनाऽजेन वा तस्य चैवाऽऽवृदष्टका ॥

'आवृदष्टका' यस्यामष्टकायां आवृतवपाहोमाद्याः ॥

पैठीनसिः

मृतस्य मासि मासि श्राद्धं कुर्यात् । संवत्सरान्ते विसर्जनम् । नवमास्यमित्येके ॥

देवलः

एकादशादिभिः श्राद्धे मृतस्याप्यायनं चरेत् ।
सम्यक् संवत्सरे पूर्णे पितॄणां स्थानमृच्छति ॥

हारीतः

मृते पितरि वै पुत्रः पिण्डमब्दे समाचरेत् ।
अन्नं कुम्भं च विप्राय प्रेतनिर्देशधर्मतः ॥

याज्ञवल्क्यः [१, २५५]

अर्वाक् सपिण्डीकरणं यस्य संवत्सराद्भवेत् ।
तस्याप्यन्नं सोदकुम्भं [1]दद्याद्वर्षं द्विजन्मने ॥

प्रेताधिकारे पारस्करः [३, १०, ५४-५५]

अहरहरन्नमस्मै ब्राह्मणायोदकुम्भं च दद्यात् । पिण्डमप्येके निगृह्णन्ति[2] ॥

(1) 'दद्यात्संवत्सरं द्विजे' इति मिताक्षरापाठः.

(2) 'निपृणन्ति' इति चौखाम्बामुद्रितपारस्करीये (पृ. ६४८) 'निपृणन्ति' इच्छन्ति ।

॥ २८ ॥

## ॥ अथ सपिण्डीकरणम् ॥

तत्र शातातपः

> संवत्सरे तु विज्ञेयं सपिण्डीकरणं त्विह ।
> सपिण्डीकरणान्ता च ज्ञेया प्रेतक्रिया बुधैः ॥
> सपिण्डीकरणं श्राद्धं दैवपूर्वं नियोजयेत् ।
> पितॄनेवाशयेत्तत्र पुनः प्रेतं च निर्दिशेत् ॥
> निरूप्य चतुरः पिण्डान् पिण्डदः प्रतिनामतः ।
> ये समानामिति द्वाभ्यामाद्यं तु विभजेत् त्रिधा ॥
> एक एव विधिः पूर्वमर्घपात्रचतुष्टये ।
> आसिञ्चेत्पितृपात्राणि प्रेतपात्रेण मन्त्रवित् ॥

'प्रेतक्रिया' प्रेतशब्दोल्लेखनया या क्रिया सा क्रियते । तेन सपिण्डीकरणापकर्षपक्षेऽप्युदकुम्भदाने प्रेतशब्दोल्लेखो न कार्य इति । 'पितॄनेव' न तु मातामहादीन् । 'आद्यं' प्रेतपिण्डम् ॥

आश्वलायनपरिशिष्टम्[1]

अथ सपिण्डीकरणम् । चत्वार्युदपात्राणि । एकं मृतस्य । त्रीणीतरेषाम् । प्रथमं पात्रं त्रिषु पात्रेषु नियोजयेत् । समानीव आकूतिरित्येवमेव प्रथमं पिण्डं त्रिषु पिण्डेषु नियोजयेत् । मधुमतीभिः संगच्छध्वमिति द्वाभ्याम् । एवं चतुर्थोऽनुज्ञापितो भवति । न चात्र दैवं भोजयेत् । प्रागेव दैवेऽर्घमन्नाद्यं च दत्त्वा गन्धमाल्यैः पात्रमर्चयित्वा हुतशेषं पितृभ्यः पाणिषु दद्यात् । पुनस्तदेव च ॥

अन्नं पाणितले दत्तं पूर्वमश्नन्त्यबुद्धयः।
पितरस्तेन तृप्यन्ति सर्वं न प्राप्नुवन्ति च ॥
यच्च पाणितले दत्तं यच्चान्नमुपकल्पितम्।
एकीभावेन भोक्तव्यं पृथग्भागो न विद्यते ॥

'अनुज्ञपितो' विसर्जितः। 'न चात्र' इति, पित्रादीनामासनदानादिपदार्थकाण्डे देवासनादिपदार्थसंकरं न कुर्यादित्यर्थः। 'हुतशेषं' अग्नौकरणहोमावशिष्टम् ॥

विष्णुः [२१,१२-२१]

संवत्सरान्ते प्रेताय तत्पित्रे तत्पितामहाय च तत्प्रपितामहाय ब्राह्मणान् भोजयेत्। अग्नौकरणमावाहनं पाद्यं च कुर्यात्। संसृजतु [त्वा] पृथिवी समानी व इति प्रेतपाद्यपात्रे [पितृपात्र]त्रये योजयेत्। उच्छिष्टसन्निधौ पिण्डचतुष्टयं कुर्यात्। ब्राह्मणांश्च स्वाचान्तान् दत्तदक्षिणाननुव्रज्य विसर्जयेत्। ततः पिण्डमर्घपात्रोदकवत् पिण्डत्रये निदध्यात्। कर्षूत्रयसन्निकर्षेऽप्येवमेव। एवं सपिण्डीकरणं मासिकार्थवद्द्वादशाहं श्राद्धं कृत्वा त्रयोदशेऽह्नि वा कुर्यात्। मन्त्रवर्जं हि शूद्राणां द्वादशेऽह्नि। संवत्सराभ्यन्तरे यद्यधिकमासो भवेत्तदा मासिकार्थे दिनमेकं वर्धयेत् ॥

'कर्षूत्रयसन्निकर्षेऽप्येवम्' इति, प्रेतैकोद्दिष्टसंबन्धिकर्षूत्रयसन्निहितानपि पिण्डान् पित्रादिपिण्डेषु संसृजेत्। 'मासिकार्थवत्' मासि भवानि श्राद्धानि 'मासिकानि', तदर्थः प्रेताप्यायनादिः, तेन युक्तानि श्राद्धानि मासिकार्थानि। आशौचापगमे 'द्वादशाहं' द्वादशाहस्तु कृत्वात्र त्रयोदशेऽह्नि सपिण्डीकरणं कुर्यात्। आद्यं

चैकोद्दिष्टमाशौचान्त एव कृतम् । ऊनषाण्मासिकोनादिकोऽपि षष्ठद्वादशदिवसयोरेव कर्तव्ये । एवमेतस्मिन् पक्षे षोडशश्राद्धानि भवन्ति । एतच्च साग्नेर्निरग्नेश्च वृद्ध्यादावपकर्षनिमित्ते सति बोद्धव्यम् । वृद्धेश्च सपिण्डीकरणापकर्षनिमित्तत्वम् "अर्वाक् संवत्सराद्वृद्धौ पूर्णे संवत्सरेऽपि वा । ये सपिण्डीकृताः प्रेताः" इति शातातपवाक्येऽनुवाददर्शनाज्ज्ञातव्यम् ॥

पैठीनसिः

संवत्सरान्ते विसर्जनं नवमास्यमित्येके ।

अयं च सपिण्डीकरणे नवमासविधिर्दशममासादौ वृद्धिश्राद्धनिमित्तसंभवे बोद्धव्यः । न ततोऽर्वाक् सपिण्डीकरणं कर्तव्यम् ॥

बैजवापः

अथ सपिण्डीकरणम् । संवत्सरमेकं पिण्डमनुद्दिश्य समाप्ते संवत्सरे चत्वार्युदपात्राणि संयुनक्ति । तथैकं प्रेताय त्रीन् पितृभ्यः । तत्प्रेतपात्रं पितृपात्रेषु सिञ्चति । ये समाना इति द्वाभ्यामेवमेव पिण्डान् यथा विमृशति ।

एष वोऽनुगतः प्रेतः पितरस्तं ददामि वः ।
शिवमस्त्विति शेषाणां जायन्तां चिरजीविनः ॥
समानीव आकूतिः समाना हृदयानि वः ।
समानमस्तु वो मनो यथा वस्सुसहासति ॥
संगच्छध्वं संवदध्वं सं वो मनांसि जानताम् ।
देवा भागं यथा पूर्वे संजानाना उपासते ॥ इति ।

अभिशस्तपतितभ्रूणघ्नान् स्त्रीं च व्यभिचारिणीं नातिदिशेत् ॥

हारीतः

समाप्ते तु पशुश्राद्धं विधिवत्प्रतिपादयेत् ।
चतुरो निर्वपेत् पिण्डान् प्रथमं तेषु निर्वपेत् ॥
वपां पशूंश्चरुं चैव ह्यवदानानि यानि च ।
हुत्वा नीतिविधानेन शेषान्पिण्डान्समावपेत् ॥
ततः प्रभृति वै प्रेतः पितृसामान्यमाप्नुयात् ।
विन्दते पितृलोकं च ततः श्राद्धं प्रवर्तते ॥
विधिना सन्नियुक्तस्य यावल्लोमानि वै पशोः ।
तावद्वर्षसहस्राणि पितॄणामक्षयं भवेत् ॥
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ।
सर्वकामैश्च बध्नाति पशुयाजी न संशयः ॥

ब्रह्मपुराणे

चतुर्भ्यश्चार्घपात्रेभ्य एकं वामेन पाणिना ।
गृहीत्वा दक्षिणेनैव पाणिना च तिलोदकम् ॥
संसृजतु त्वा पृथिवी ये समाना इति स्मरन् ।
प्रेतविप्रस्य हस्ते तु चतुर्भागं जलं क्षिपेत् ॥
ततः पितामहादिभ्यस्तत्तन्मन्त्रैः पृथक् पृथक् ।
ये समाना इति द्वाभ्यां तज्जले तु समर्पयेत् ॥
अर्घस्तेनैव विधिना पात्राच्च विधिपूर्वकम् ।
तेभ्यश्चार्घं निवेद्यैव पश्चाच्च स्वयमाचरेत् ॥
अथ तेनैव विधिना दर्भमूलेऽवनेजनम् ।
पितुर्दत्वा च पिण्डं तु दद्याद्भक्त्या तु पूर्ववत् ॥
दत्वा पिण्डमथाष्टाङ्गं ध्यात्वा तं च सुभास्वरम् ।
सुवर्णरूप्यदर्भैस्तु तस्मिन् पिण्डं ततस्त्रिधा ॥
कृत्वा पितामहादिभ्यः पितृभ्यः प्रेतमर्पयेत् ।
संसृजतु त्वा पृथिवी वायुरग्निः प्रजापतिः ॥
एतन्मन्त्रं जपेद्भक्त्या समानीवन्तमेव च ।

ये समाना इति द्वाभ्यां पितृभ्यः प्रेतमर्चयेत् ॥
वर्तुलांस्तु ततस्तांस्त्रीन् पिण्डान् कृत्वा प्रपूजयेत् ।
अर्घपुष्पैस्तथा धूपैर्दीपमाल्यानुलेपनैः ॥
मुख्यं तु पितरं कृत्वा पुनस्त्वन्यान्यथाक्रमम् ।
मृते पितरि यस्याथ विद्यते च पितामहः ॥
तेन देयास्त्रयः पिण्डाः प्रपितामहपूर्वकाः ।
तेभ्यश्च पैतृकः पिण्डो नियोक्तव्यस्तु पूर्ववत् ॥
मातर्यथ मृतायां तु विद्यते च पितामही ।
प्रपितामहिपूर्वस्तु कार्यस्तत्राप्ययं विधिः ॥

जाबालः

नासपिण्डाग्निमान् पुत्रः पितृयज्ञं समाचरेत् ।
पापी भवत्यकुर्वन् हि पितृहा चोपजायते ॥

अयमर्थः । अशौचानान्तरमागामिनि दर्शेऽवश्यं-कर्तव्यपिण्डपितृयज्ञश्राद्धं मासिकश्राद्धपूर्वकं सपिण्डीकरणं कृत्वैव कुर्यात् ॥

याज्ञवल्क्यः [१, २५३-२५४]

गन्धोदकतिलैर्युक्तं कुर्यात् पात्रचतुष्टयम् ।
अर्घार्थं पितृपात्रे तु प्रेतपात्रं प्रसेचयेत् ॥
ये समाना इति द्वाभ्यां शेषं पूर्ववदाचरेत् ।
एतत्सपिण्डीकरणमेकोद्दिष्टं स्त्रिया अपि ॥

'स्त्रिया अपि' 'एकोद्दिष्टम्' एकादशाहादि 'सपिण्डी-करणं' चैवमेव कर्तव्यमित्यर्थः ।

वृद्धशातातपः

भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्ट एव च ।
सहपिण्डक्रियां कृत्वा कुर्यादभ्युदयं ततः ॥

33

विष्णुः [२१, २२]

सपिण्डीकरणं स्त्रीणां कार्यमेव यथा भवेत् ।
यावज्जीवं तथा कुर्याच्छ्राद्धं तु प्रतिवत्सरम् ॥

वृद्धशातातपः

मातुः सपिण्डीकरणं कथं कार्यं सुतैर्भवेत् ।
पितामह्या सहैवास्याः सपिण्डीकरणं स्मृतम् ॥

छन्दोगपरिशिष्टे कात्यायनः [गोभिल, २, १०२]

मातुः सपिण्डीकरणं पितामह्या सहोदितम् ।
यथोक्तेनैव कालेन पुत्रिकाया न चेत् सुतः ॥

अस्यार्थः—पुत्रेण मातुः सपिण्डीकरणं पितामह्यादिभिः सह कर्तव्यम् । पुत्रिकापुत्रेण मातामहादिभिः सह ॥

[1]बौधायनयज्ञपार्श्वौ

आदिशेत्प्रथमे पिण्डे मातरं पुत्रिकासुतः ।
द्वितीये पितरं तस्यास्तृतीये च पितामहम् ॥

शातातपो, वृद्धशातातपश्च द्वितीये

अप्रत्तायां पिता कुर्यात् प्रत्तायां तु पतिस्तथा ।
स्वेन स्वेनैव गोत्रेण संस्थितायां तिलोदकम् ॥
संस्थितायां तु भार्यायां सपिण्डीकरणान्तिकम् ।
पैतृकं भजते गोत्रमूर्ध्वं तु पतिपैतृकम् ॥
एकमूर्तित्वमायाति सपिण्डीकरणे कृते ।
पत्नीपतिपितॄणां तु तस्मात्तद्गोत्रभागिनी ॥
सपिण्डीकरणादूर्ध्वं यत्पितृभ्यः प्रदीयते ।
सर्वेष्वंशहरा माता इति धर्मेषु निश्चयः ॥

(1) बौ. ध. सू., २, ३, १६

'संस्थितायां' मृतायाम्। 'तिलोदकम्' इत्यौर्ध्वदेहिकमात्रोपलक्षणम्। पितृगोत्रभाजनं चासुरादिनिन्दितविवाहोढाविषयमिति स्मृतिमञ्जरीकारप्रभृतयः[1]। 'ऊर्ध्वं तु पतिपैतृकम्' इत्यत्र हेतुः 'एकमूर्तित्वम्' इत्यादि। 'सपिण्डीकरणादूर्ध्वम्' इत्यनेन पित्राद्युद्देशेनैव व्यज्यमाने द्रव्ये 'माता' 'अंशहरा' तृप्तिभागिनी भवतीत्युक्तम्॥

बृहस्पतिः [श्राद्ध., ८५, २९, २६]

स्वेन भर्त्रा समं श्राद्धं माता भुङ्क्ते [2]स्वधामयम्।
पितामही च स्वेनैव तथैव प्रपितामही॥
भर्तृगोत्रेण दातव्यं स्त्रीणां पिण्डोदकं सुतैः।
पितामहपितृभ्यां च स्वेन स्वेन विधानतः॥
पाणिग्रहणिका मन्त्राः पितृगोत्रापहारकाः।
भर्तृगोत्रेण नारीणां देयं पिण्डोदकं ततः।
चतुर्थीहोममन्त्रेण त्वङ्मांसहृदयेन्द्रियैः॥
भर्त्रा संयुज्यते पत्नी तद्गोत्रा तेन सा भवेत्।

विष्णुः [७४,१-८]

अष्टकासु दैवपूर्वं शाकमांसापूपकैः श्राद्धं कृत्वा त्वन्वष्टकास्वष्टकावद्वह्नौ हुत्वा दैवपूर्वमेवं मात्रे पितामह्यै प्रपितामह्यै च पूर्ववद्ब्राह्मणान् भोजयित्वा दक्षिणाभिश्चाभ्यर्च्यानुव्रज्य विसर्जयेत्। ततः षट्कर्षूः कुर्यात्। तन्मूले च प्रागुदगग्न्युपसमाधानं कृत्वा हुत्वा च पिण्डत्रयनिर्वपणं प्रत्येकस्मिन् कर्षूमूले कुर्यात्[3]। कर्षूत्रये पुरुषाणां कर्षूत्रये स्त्रीणाम्। पुरुषकर्षूत्रयं सान्नेनोदकेन

(1) स्मृतिमञ्जरी a work by गोविन्दराज
(2) 'सदैवकम्' इति स्मृतिचन्द्रिकापाठः (श्राद्ध., p. 98)
(3) Sūtra wanting in Jolly's ed. p. 166

पूरयेत् । स्त्रीकर्षूत्रयं सान्नेन पयसा । दध्ना मांसेन पयसा प्रत्येकं कर्षूत्रयम् । पूरयित्वा जपेदेतद्भवद्भ्यो भवतीभ्योऽस्तु चाक्षयम् ॥

'स्त्रीकर्षूत्रयं सान्नेन पयसा' पूरयेदित्यर्थः । 'दध्ना मांसेन पयसा प्रत्येकं कर्षूत्रयं' पूरयेदित्यपरः ॥

छन्दोगपरिशिष्टे कात्यायनः [गोभिल, २,१०३]

न योषिद्भ्यः पृथग्दद्यादवसानदिनादृते ।
स्वभर्तृपिण्डमात्राभ्यस्तृप्तिरासां यतः स्मृता ॥

तथा[1]

पितामहः पितुः पश्चात् पञ्चत्वं यदि गच्छति ।
पौत्रेणैकादशाहादि कर्तव्यं श्राद्धषोडशम् ॥
नैतत्पौत्रेण कर्तव्यं पुत्रवांश्चेत्पितामहः ।
पितुः सपिण्डतां कृत्वा कुर्यान्मासानुमासिकम् ॥
असंस्कृतौ न संस्कार्यौ पूर्वौ पौत्रप्रपौत्रकैः ।
पितरं तत्र संस्कुर्यादिति कात्यायनोऽब्रवीत् ॥
पापिष्ठमपि शुद्धेन शुद्धं पापकृतापि वा ।
पितामहेन पितरं संस्कुर्यादिति निश्चयः ॥

'पूर्वौ' पितामहप्रपितामहौ यत्र केनापि निमित्तेन 'असंस्कृतौ' अकृतसपिण्डीकरणौ, तत्रापि ताभ्यां सह 'पितरं संस्कुर्यात्' सपिण्डयेदित्यर्थः ॥

इति भट्टश्रीलक्ष्मीधरविरचिते कृत्यकल्पतरौ श्राद्धकाण्डे सपिण्डीकरणपर्व ॥

(1) गोभिलस्मृतिः, २, ९७–१००.

॥ २९ ॥

## ॥ अथ सपिण्डीकरणोत्तरश्राद्धम् ॥

तत्र शातातपः

प्रदानं यत्र यत्रैषां सपिण्डीकरणात्परम् ।
तत्र पार्वणवच्छ्राद्धं ज्ञेयमभ्युदयादृते ॥
अर्वाक् संवत्सराद्वृद्धौ पूर्णे संवत्सरेऽपि वा ।
ये सपिण्डीकृताः प्रेता न तेषां तु पृथक्क्रिया ॥
पृथक् पिण्डप्रदानं तु तस्मादूर्ध्वं विधीयते ।
प्रेतानामिह सर्वेषां ये मन्त्रैस्तु नियोजिताः ॥
कृतार्थास्ते हि संवृत्ताः सपिण्डीकरणे कृते ।
प्रेतत्वाच्चेह निस्तीर्णाः प्राप्ताः पितृगणं तु ये ॥
यः सपिण्डीकृतं प्रेतं पृथक् पिण्डे नियोजयेत् ।
विधिघ्नस्तेन भवति पितृघ्ना चोपजायते ॥

'पृथक् पिण्डे', पृथक् इतरपिण्डासहभावेन पिण्डो यत्र दीयते एकोद्दिष्टे, तस्मिन् 'नियोजयेत्' देवतात्वेनेति शेषः ॥

जाबालः

पितृयज्ञं तु निर्वर्त्य मासिकं श्राद्धमेव च ।
श्राद्धं प्रति रुचौ चैव मातापित्रोर्मृतेऽहनि ॥
असपिण्डीकृतं प्रेतमेकोद्दिष्टेन तर्पयेत् ।
सपिण्डीकरणादूर्ध्वं त्रिभिः सामान्यमिष्यते ॥
औरसक्षेत्रजौ पुत्रौ विधिना पार्वणेन तु ।
प्रत्यब्दमितरे कुर्युरेकोद्दिष्टं सुता दश ॥

'पितृयज्ञः' अत्र पितृतर्पणम् ।

याज्ञवल्क्यः [१, २५६]

मृतेऽहनि तु कर्तव्यं प्रतिमासं च वत्सरम् ।
प्रतिसंवत्सरं चैवमाद्यमेकादशेऽहनि ॥

मत्स्यपुराणे

ततः प्रभृति संक्रान्तावुपरागादिपर्वसु ।
त्रिपिण्डमाचरेच्छ्राद्धमेकोद्दिष्टं मृताहनि ॥
एकोद्दिष्टं परित्यज्य पार्वणं यः समाचरेत् ।
सदैव पितृहा स स्यान्मातृभ्रातृविनाशकः ॥
मृताहे पार्वणं कुर्वन्नधोऽधो याति मानवः ।
संपृक्तेष्वाकुलीभावः प्रेतेषु च ततो भवेत् ॥

तथा

यत्र यत्र प्रदातव्यं सपिण्डीकरणात्परम् ।
पार्वणेन विधानेन देयमग्निमता सदा ॥

अत्र च प्रत्यब्दं मृताहनि पार्वणैकोद्दिष्टयोस्तुल्यवद्विकल्पे प्राप्ते व्यवस्थितिर्यथा—औरसः क्षेत्रजश्च यः साग्निः प्रत्यब्दं पार्वणमेव कुर्यात् । "औरसक्षेत्रजौ पुत्रौ विधिना पार्वणेन तु" इति जाबालवचनात् ॥

यत्र यत्र प्रदातव्यं सपिण्डीकरणात्परम् ।
पार्वणेन विधानेन देयमग्निमता सदा ॥

इति मत्स्यपुराणवचनाच्च । निरग्निकौ त्वौरसक्षेत्रजौ, इतरे तु पुत्राः साग्नयो निरग्नयश्च प्रत्यब्दं मृताहन्येकोद्दिष्टमेव कुर्युरिति महार्णवप्रकाशकारः ॥

॥ ३० ॥

## ॥ अथ श्राद्धाधिकारिणः ॥

तत्र मरीचिः

मृते पितरि पुत्रेण क्रिया कार्या विधानतः ।
बहवः स्युर्यदा पुत्राः पितुरेकत्र वासिनः ॥
सर्वेषां तु मतं कृत्वा ज्येष्ठेनैकेन यत्कृतम् ।
द्रव्येण चाऽविभक्तेन सर्वैरेव कृतं भवेत् ॥

शङ्खलिखितौ

यद्येकजाता बहवः पृथक्क्षेत्राः पृथग्धनाः ।
एकपिण्डाः पृथक् शौचाः पिण्डस्त्वावर्तते त्रिषु ॥

'पृथक्क्षेत्राः' विजातीयमातृजाताः । 'एकपिण्डाः' एकमेव पिण्डं दद्युः, न पुनः प्रतिपुरुषं पृथक् पिण्डदानम् । 'पृथक्शौचाः' विजातीयमातृसंम्बन्धेन पृथक्शुद्धयः । 'पिण्डस्त्वावर्तते त्रिषु' सपिण्डता तु त्रिपुरुषेषु भवतीत्यर्थः ॥

पैठीनसिः

यावत् त्रिपुरुषमविच्छिन्नं तावत्पिण्डः प्रदीयते । त्रिपुरुषविनाशे तु पृथक् पिण्डोदकक्रिया ॥

'अविच्छिन्नं' विजातीयपुरुषसंप्रवेशेन जीवनेन च पतितत्वेन च विच्छेदरहितम् । 'त्रिपुरुषविनाशे' विजातीय-क्षत्रियादिप्रवेशेन ॥

बृहस्पतिः [श्राद्ध; १९०]

प्रमीतस्य पिण्डं[1] पुत्रैः श्राद्धे देयं प्रयत्नतः ।
ज्ञातिबन्धुसुहृच्छिष्यैर्ऋत्विग्भृत्यपुरोहितैः ॥

अत्र च पुत्रादिपूर्वपूर्वाभाव उत्तरोत्तराधिकारो बोद्धव्यः ॥

गौतमः [१९, १३-१४]

पुत्राभावे सपिण्डा मातृसपिण्डा शिष्याश्च दद्युः ।
तदभावे ऋत्विगाचार्यौ ॥

विष्णुपुराणे [३, १३, ३१-४०]

पुत्रः पौत्रः प्रपौत्रो वा तद्वद्वा [2]भ्रातृसन्ततिः ।
सपिण्डसन्ततिर्वापि क्रियार्हा नृप जायते ॥
तेषामभावे सर्वेषां समानोदकसन्ततिः ।
[3]मातृपक्षस्य पिण्डेन संबन्धो यो जलेन वा ॥
कुलद्वयेऽपि चोच्छिन्ने स्त्रीभिः कार्याः क्रिया नृप ।
सङ्घातान्तर्गतैर्वापि कार्याः [4]प्रेतस्य या क्रियाः ॥
[5]उच्छिन्नबन्धुरिक्थाद्वा कारयेदवनीपतिः ।
पूर्वाः क्रिया मध्यमाश्च तथा चैवोत्तराः क्रियाः ॥
त्रिप्रकाराः क्रिया [6]ह्येता संस्थाभेदान् शृणुष्व मे ।
आदाहाद्वार्यायुधादिस्पर्शादन्त्याश्च याः क्रियाः ॥
ताः पूर्वा मध्यमा मासि मास्येकोद्दिष्टसंज्ञिताः ।
प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु ॥

(1) 'पितुः' इति पराशरमाधवीयपाठः (आ., ४६१)
(2) 'भ्राता वा' इति गोरखपुरकोशे (पृ. २४५)
(3) 'मातृपक्षसापिण्डेन' इति पाठः
(4) 'प्रेतस्य च क्रियाः' इति पाठः
(5) 'उत्सन्नबन्धु' इति पाठः
(6) 'सर्वास्तासां भेदं शृणुष्व मे' इति पाठः

क्रियन्ते याः क्रियाः पित्र्याः प्रोच्यन्ते ता नृपोत्तराः ।
पितृमातृसपिण्डैस्तु समानसलिलैस्तथा ॥
सङ्घातान्तर्गतैश्चैव[1] राज्ञा वा [2]धनहारिणा ।
पूर्वाः क्रियास्तु कर्तव्याः पुत्राद्यैरेव चोत्तराः ॥
दौहित्रैर्वा [3]नरश्रेष्ठ कार्यास्तत्तनयैस्तथा ।
मृताहनि तु कर्तव्याः स्त्रीणामप्युत्तराः क्रियाः ॥
प्रतिसंवत्सरं राजन्नेकोद्दिष्टविधानतः ।

'मातृपक्षस्य पिण्डेन संबन्धः' मातृसपिण्डतः, 'मातृपक्षस्य जलेन संबन्धो' मातृसमानोदकतः । 'उत्सन्नबन्धुरिक्थात्' उत्सन्ना बन्धवो यस्य स तथा, तस्य 'रिक्थात्'। 'आदाहाद्वार्यायुधादिस्पर्शादन्त्यादि', 'अन्त्याः' अन्तो मरणं, तत्र भवाः, ताश्च दाहोपक्रमा वार्यायुधादिस्पर्शपर्यन्ताः पूर्वा इत्यर्थः । 'मासि मासि' इत्येकादशाहादिसपिण्डीकरणपूर्वप्रेतक्रियोपलक्षणम् । अत्र च पितृमातृसपिण्डादयः पूर्वक्रियामेव कुर्युर्नोत्तराम् । मध्यमक्रियायां त्वेषामनियमः । उत्तरक्रियायां तु पुत्राद्या भाविसन्ततिपर्यन्ता दौहित्रास्तत्तनयाश्च नियताः । 'दौहित्रैः' 'तत्तनयैः' इति च पुत्रिकापुत्रविषयम् ॥

ब्रह्मपुराणे

न कदाचित्सगोत्राय श्राद्धं कार्यमगोत्रजैः ।
असमाप्तव्रतस्यापि कर्तव्यं ब्रह्मचारिणः ॥
श्राद्धादि मातापितृभिर्न तु तेषां करोति सः ।
नित्यं गुरुकुलस्थस्य गुरुः सब्रह्मचारिणः ॥

(1) 'गतैर्वापि' इति पाठः
(2) 'तद्धनहारिणा' इति पाठः
(3) 'नृपश्रेष्ठ' इति पाठः

निरन्वये सपिण्डे तु मृते सति दयान्वितः।
तदशौचं पुरा तीर्त्वा कुर्यात्तत् पितृवत् क्रियाम्॥
त्रयाणामाश्रमाणां तु कुर्याद्दाहादिकां क्रियाम्।
यतेः किंचिन्न कर्तव्यं न चान्येषां करोति सः॥
गुरुः करोति शिष्याणां पिण्डनिर्वपणं सदा।
कृत्वा तत्पैतृकं शौचं स्वजातिविहितं च यत्॥
भ्रातुर्भ्राता स्वयं चक्रे तद्भार्या चेन्न विद्यते।
तस्य भ्रातृसुतश्चक्रे यस्य नास्ति सहोदरः॥
दत्तानां चाप्यदत्तानां कन्यानां कुरुते पिता।
चतुर्थेऽहनि तास्तेषां कुर्वीरन् सुसमाहिताः॥
मातामहानां दौहित्राः कुर्वन्त्यहनि चापरे।
तेऽपि तेषां प्रकुर्वन्ति द्वितीयेऽहनि सर्वदा॥
जामातुः श्वशुरश्चक्रे तेषां तेऽपि च संयताः।
मित्राणां तदपत्यानां श्रोत्रियाणां गुरुस्तथा॥
भागिनेयसुतानां च सर्वेषां त्वपरेऽहनि।
श्राद्धं तु कृत्वा प्रथमं स्नात्वा कृत्वा जलक्रियाम्॥
मृते राज्ञि सपिण्डे तु निरपत्ये पुरोहितः।
मन्त्री वा तदशौचं तु कृत्वा पश्चात्करोति सः॥
ब्राह्मणस्त्वन्यवर्णानां न करोति कदाचन।
कामाल्लोभाद्भयाद्वापि कृत्वा तज्जातितां व्रजेत्॥
पुत्राः कुर्वन्ति विप्राय क्षत्रविट्छूद्रयोनयः।
स तादृशेभ्यः पुत्रेभ्यो न करोति कदाचन॥
स्वमाता कुरुते तेषां तेऽपि तस्याश्च कुर्वते॥

स्वं गोत्रं यस्य सः 'स्वगोत्रः', विद्यमानसगोत्र इत्यर्थः। यस्मै श्राद्धं प्रकर्तव्यं तस्य सगोत्रे विद्यमाने अन्यगोत्रेण सङ्घातान्तर्गतेन राज्ञा वा श्राद्धं न कर्तव्यम्। 'असमाप्त-व्रतस्यापि' 'तत् पितृवत्' यथा पिता पुत्रस्य यावद्यादृशीं

क्रियां करोति तामसपिण्डो 'दयान्वितः' कुर्यात्। 'यतेः किंचिन्न कर्तव्यम्' इति दाहादिसपिण्डीकरणान्तप्रेतक्रियाविषयम्।

तथा च महाभारते

न दग्धव्यो न दग्धव्यो विदुरोऽयं कदाचन।
ज्ञानदग्धशरीरस्य पुनर्दाहो न विद्यते॥

'स्वजातिविहितं च यत्' आशौचान्तवार्यायुधादिस्पर्शादि।

मार्कण्डेयपुराणे

सर्वाभावे स्त्रियः कुर्युः स्वभातृणाममन्त्रकम्।
तदभावे तु नृपतिः कारयेत् स्वकुटुम्बवत्॥
तज्जातीयैर्नरैः सम्यग्दाहाद्याः सकलाः क्रियाः।

'सर्वाभावे स्त्रियः कुर्युः स्वभर्तृणाममन्त्रकम्' इति पत्नीव्यतिरिक्तावरुद्धादिस्त्रीविषयम्।

भ्रातुर्भ्राता स्वयं चक्रे तद्भार्या चेन्न विद्यते।
इत्यर्वागेव पत्न्या अधिकारदर्शनात्॥

तथा

स्त्रीणामप्येवमेवैतदेकोद्दिष्टमुदाहृतम्।
सपिण्डीकरणं तासां पुत्राभावे न विद्यते॥
प्रतिसंवत्सरं कार्यमेकोद्दिष्टं नरैः स्त्रियाः।
मृताहनि यथान्यायं नृणां यद्वदिहोदितम्॥

'स्त्रीणामप्येवमेव' इति, यादृशेन सम्बन्धेन पितृव्यत्वादिना पुरुषाणामेकादशाहादि तादृशेनैव सम्बन्धेन स्त्रीणामपि तत्कर्तव्यमिति॥

## ॥ ३१ ॥

## ॥ अथाभ्युदयिकम् ॥

तत्र विष्णुपुराणे [३, १३, ५-६]

कन्यापुत्रविवाहेषु प्रवेशो नववेश्मनः ।
नामकर्मणि बालानां चूडाकर्मादिके तथा ॥
सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने ।
नान्दीमुखं पितृगणं पूजयेत्प्रयतो गृही ॥

तथा[1]

युग्मांस्तु प्राङ्मुखान् विप्रान् भोजयेन्मनुजेश्वर ।

मत्स्यपुराणे

उत्सवानन्दसन्तानयज्ञोद्वाहादिमङ्गले ।
मातरः प्रथमं पूज्याः पितरस्तदनन्तरम् ॥
ततो मातामहाश्चैव विश्वेदेवास्तथैव च ।

ब्रह्मपुराणे

पिता पितामहश्चैव तथैव प्रपितामहः ।
त्रयो ह्यश्रुमुखा ह्येते पितरः परिकीर्तिताः ॥
तेभ्यः पूर्वतरा ये च प्रजावन्तः सुखैधिताः ।
ते तु नान्दीमुखा नान्दी समृद्धिरिति कथ्यते ॥

तथा

कर्मण्यथाभ्युदयिके मङ्गल्यवति शोभने ।
जन्मन्यथोपनयने विवाहे पुत्रकस्य च ॥

(1) विष्णुपुराण, ३, १३, २०—'अयुजो भोजयेत्कामं द्विजानन्ते दिने-दिने' इति गोरखपुरकोशपाठः

पितृन्नान्दीमुखान्नाम तर्पयेद्विधिपूर्वकम् ।
पठेच्छकुनिसूक्तं तु स्वस्तिसूक्तं शुभं तथा ॥
नान्दीमुखान् पितृन् भक्त्या साञ्जलिश्च समाह्वयेत् ।

तथा

पठन् पवित्रं मन्त्रं तु विश्वेदेवाः स आगत ।
प्रशस्तान् शाद्वलान् दर्भानास्तीर्य प्राङ्मुखांस्तथा ॥
रक्षोघ्नीर्जुहुयादग्नौ समिदर्थे महौषधीः ।
तिलार्थे तत्र विकिरेत् प्रशस्तांश्च तथा यवान् ॥
सर्वं यज्ञोपवीतेन न कुर्यादपसव्यकम् ।
अन्नं दद्याच्च दैवेन तीर्थेन च जपन्स्वधाम् ॥
कच्चित् संपन्नमेतन्मे तान् पृच्छेच्च प्रहर्षयन् ।
सुसंपन्नं च ते ब्रूयुः सर्वसिद्धिं ततः क्षिपेत् ॥
नान्दीमुखेभ्यश्चाक्षय्यमिदमस्त्विति संजपेत् ।
प्राङ्मुखांस्त्वथ दर्भांस्तु दद्यात् क्षीरावनेजनम् ॥
दत्वा नान्दीमुखेभ्यश्च प्राचीं गच्छन् दिशं क्रमात् ।
शाल्यन्नं दधिमध्वक्तं बदराणि यवांस्तथा ॥
मिश्रीकृत्य तु चत्वारि पिण्डान् श्रीफलसन्निभान् ।
दद्यान्नान्दीमुखेभ्यश्च पितृभ्यो विधिपूर्वकम् ॥
अर्घं पुष्पं च धूपं च प्रशस्तमनुलेपनम् ।
वासश्चाप्यहतं युग्मं देयं च सदशं समम् ॥
द्राक्षामलकमूलानि यवांश्चाथ निवेदयेत् ।
तथैव दक्षिणार्थं तु दद्याद्विप्रेषु सर्वदा ॥
अथाक्षय्योदकस्थाने दत्त्वा क्षीरयवोदकम् ।
प्रपितामहसंज्ञेभ्यो नान्दीमुख्यश्च मातरः ॥
मातामहिपितामह्यः प्रपितामह्य एव हि ।
मातामहेभ्यश्च तथा नान्दीवक्त्रेभ्य एव च ॥
प्रमातामहसंज्ञेभ्यो भवद्भिश्च स्वधोच्यताम् ।

अस्तु स्वधेति ते तं च जल्पन्ति प्रहसाः शुभम् ॥
विश्वेदेवाश्च प्रीयन्तामिति दाता ब्रवीति तान् ।
प्रीता भवन्तु ते तं च वदन्ति मधुराक्षरम् ॥
तमूषु वाजिनमिति पठंस्तांश्च विसर्जयेत् ।
अथ नान्दीमुखीभ्यश्च मातृभ्यः श्राद्धमुत्तमम् ॥
अनेन विधिना कार्यं सीमन्तोन्नयनादिषु ।

'समं' साधारणमेकमेव, प्रतिपिण्डं भिन्नमित्यर्थः । 'मूलम्' आर्द्रकादि । 'प्रहसाः' प्रकृष्टहासाः । अत्र च 'नान्दीमुखाः पितरः पितामहाः प्रपितामहा' इत्यादि-कात्यायनवाक्यदर्शनात् पित्रादय एव नान्दीमुखविशेषण-वन्तो देवताः । यत्तु ब्रह्मपुराणे पित्रादित्रिकस्या-श्रुमुखत्वमुक्त्वा ततः परेषां नान्दीमुखत्वेन वृद्धिश्राद्ध-देवतात्वाभिधानम्, तज्जीवत्पित्रादित्रयस्य श्राद्धकर्तु-र्वृद्धिश्राद्धे देवताभावार्थम् । ततश्च तस्याप्यवश्यंकर्तव्य-मिदमिति । यत्तु पार्वणादिश्राद्धं तत्तेन न कर्तव्यम् ॥ विष्णुस्मृतौ 'पितरि पितामहे प्रपितामहे च जीवति नैव कुर्यात्' इति निषेधात् ॥

कात्यायनः[1]

आभ्युदयिके प्रदक्षिणमुपचारः । पूर्वाह्णे पित्र्यमन्त्र-वर्जं [जपः ।] ऋजवो दर्भाः । यवैस्तिलार्थः । संपन्नम् इति तृप्तिप्रश्नः । [सुसम्पन्नमितीतरे ब्रूयुः]दधिबदराक्षतमिश्राः पिण्डाः । नान्दीमुखान् पितॄनावाहयिष्य इति पृच्छति । आवाहयेत्यनुज्ञातो नान्दीमुखाः पितरः प्रीयन्तामिति अक्षय्यस्थाने नान्दीमुखान् पितॄन् वाचयिष्य इति पृच्छति । वाच्यतामित्यनुज्ञातो नान्दीमुखाः पितरः पितामहाः

(1) श्राद्धकल्पसूत्र (कात्यायनीय) ६, १—१२

प्रपितामहाश्च [मातामहाः प्रमातामहाः वृद्धप्रमातामहाश्च] प्रीयन्तामिति न स्वधां प्रयुञ्जीत। युग्मानाशयेत् [अत्र][1]॥

याज्ञवल्क्यः [१, २५०]

एवं प्रदक्षिणीकृत्य वृद्धौ नान्दीमुखान् पितृन्।
यजेत दधिकर्कन्धुमिश्रान् पिण्डान् यवैः क्रियाः॥

शातातपः

पूर्वाह्णे दैविकं कार्यं श्राद्धमभ्युदयार्थिना।
सव्येन चोपवीतेन ऋजुदर्भैश्च धीमता॥
अपसव्यं च यो दद्याद्वृद्धिश्राद्धमतिक्रमात्।
न तस्य देवास्तुष्यन्ति पितरश्च यथाविधि॥
पितृणां रूपमास्थाय देवतान्नं समश्नुते।
तस्मात्सव्येन दातव्यं वृद्धिश्राद्धेषु नित्यशः॥
युग्मांस्तु भोजयेद्वृद्धौ ब्राह्मणान् नियतः शुचिः।
नान्दीमुखास्तु पितरस्तृप्यन्तामिति वाचयेत्॥
मातुः श्राद्धं तु पूर्वं स्यात् पितृणां तदनन्तरम्।
ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतम्॥
त्रिष्वप्येतेषु युग्मांस्तु भोजयेद्ब्राह्मणान् शुचिः।
प्रदक्षिणं तु सव्येन प्रदद्याद्देवपूर्वकम्॥
वसवः पितरो ज्ञेया रुद्राश्चैव पितामहाः।
प्रपितामहास्तथादित्या इत्येषा नैगमी श्रुतिः॥
अपसव्यं न कुर्वीत न कुर्यादप्रदक्षिणम्।
यथैवोपचरेद्देवांस्तथा वृद्धौ पितॄनपि॥
पवित्रपाणिराचान्त उपविष्टः समाहितः।
प्रदद्यात् प्राङ्मुखः पिण्डान् वृद्धौ सव्येन वाग्यतः॥

(1) Words in brackets are supplied from the printed *Kātyāyanaśrāddhakalpasūtra* (ed. Chowkhamba) pp. 797-798.

प्रागग्रेषु च दर्भेषु पिण्डान् दद्यात्तु वृद्धिषु ।
पार्वणे दक्षिणाग्रेषु सपिण्डीकरणं तथा ॥
नाऽनिष्ट्वा तु पितॄन् श्राद्धे कर्म दैविकमाचरेत् ।
तेभ्योऽपि मातरः पूर्वं पूजनीयाः प्रयत्नतः ॥
अकृत्वा मातृयागं तु यः श्राद्धे परिवेषयेत् ।
तस्य क्रोधसमाविष्टा हिंसामिच्छन्ति मातरः ॥

'दैविकम्' अत्राऽभ्युदयिकम्, पितॄणां नान्दीमुखानां देववदुपचारात् । 'तृप्यन्तामिति वाचयेत्' अक्षय्यस्थाने इति शेषः । 'मातृयागो' मातृपूजा ॥

आभ्युदयिकप्रस्तावे मार्कण्डेयपुराणे

वैश्वदेवविहीने तु केचिदिच्छन्ति मानवाः ।

छन्दोगपरिशिष्टे कात्यायनः [१,१३-१९]

कर्मादिषु तु सर्वेषु मातरः सगणाधिपाः ।
पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः ॥
प्रतिमासु च शुद्धासु लिखितासु पटादिषु ।
अपि चाऽक्षतपुञ्जेषु नैवेद्यैश्च पृथग्विधैः ॥
कुड्यलग्नां वसोर्धारां सप्तधारां घृतेन तु ।
कारयेत् पञ्चधारां वा नातिनीचां न चोच्छ्रिताम् ॥
आयुष्याणि च शान्त्यर्थं जप्त्वा तत्र समाहितः ।
षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेत् ॥
वसिष्ठोक्तो विधिः कृत्स्नो द्रष्टव्योऽत्र निरामिषः ।
अतः परं प्रवक्ष्यामि विशेष इह यो भवेत् ॥
प्रातरामन्त्रितान् विप्रान् युग्मानुभयतस्तथा ।
उपवेश्य कुशान् दद्यादृजूनेव हि पाणिना ॥

'आयुष्याणि' आयुर्वृद्धिकरसूक्तानि । 'षड्भ्यः' पित्रादिभ्यः मातामहादिभ्यश्च त्रिभ्यः । षड्भ्य इति च

मातृपितामहिप्रपितामहीनामुपलक्षणम् । 'प्रातरामन्त्रितान्' इति च वचनाद्वैकल्पिकमपि सायमामन्त्रणं निवर्तते। 'उभयतः' पितृपक्षे वैश्वदेवपक्षे च ॥

तथा [गोभिल; १, २४-२७]

निपातो न हि सव्यस्य जानुनो विद्यते क्वचित् ।
सदा परिचरेद्भक्त्या पितॄनप्यत्र देववत् ॥
पितृभ्य इति दत्तेषु उपवेश्य कुशेषु तान् ।
गोत्रनामभिरामन्त्र्य पितॄनर्घं प्रदापयेत् ॥
नात्रापसव्यकरणं न पित्र्यं तीर्थमिष्यते ।
पात्राणां पूरणादीनि दैवेनैव हि कारयेत् ॥
ज्येष्ठोत्तरकरान् युग्मान् कराग्राग्रपवित्रकान् ।
कृत्वार्घं संप्रदातव्यं नैकैकस्यात्र दीयते ॥

'ज्येष्ठोत्तरकरान्' ज्येष्ठस्य प्रथमोपवेशितकरस्योपरि यथा करो भवति तथेत्यर्थः । 'कराग्राग्रपवित्रान्' कराग्रे अग्रपवित्रकं पवित्राग्रं येषां ते तान् ॥

तथा [गोभिल; १, ३९-५५]

मधु मध्विति यस्तत्र त्रिर्जपोऽशितुमिच्छताम् ।
गायत्र्यनन्तरं सोऽत्र मधुमन्त्रविवर्जितः ॥
न चाश्नत्सु जपेत्त्वत्र कदाचित् पितृसंहिताम् ।
अन्य एव जपः कार्यः सोमसामादिकः शुभः ॥
यस्तत्र प्रकरोऽन्नस्य तिलवद्यववत् तथा ।
उच्छिष्टसन्निधौ सोऽत्र तृप्तेषु विपरीतकः ॥
संपन्नमिति तृप्ताः स्थ प्रश्नस्थाने विधीयते ।
सुसंपन्नमिति प्रोक्ते शेषमन्नं निवेदयेत् ॥
प्रागग्रेषु च दर्भेषु आद्यमामन्त्र्य पूर्ववत् ।

अपः क्षिपेन्मूलदेशेऽवनेनिक्ष्वेति निस्तिलाः ॥
द्वितीयं च तृतीयं च मध्यदेशाग्रदेशयोः ।
मातामहप्रभृतींस्तु तेषामेव च वामतः ॥
सर्वस्मादन्नमुद्धृत्य व्यञ्जनैरुपसिच्य च ।
संयोज्याऽक्षतकर्कन्धुदधिभिः प्राङ्मुखस्ततः ॥
अवनेजनवत् पिण्डान् कृत्वा बिल्वप्रमाणकान् ।
तत्पात्रक्षालनेनाथ पुनरप्यवनेजयेत् ॥
उत्तरोत्तरदानेऽपि पिण्डानामुत्तरोत्तरः ।
भवेदधश्चाधराणामधरश्राद्धकर्मसु ॥
तस्माच्छ्राद्धेषु सर्वेषु वृद्धिमत्स्वितरेषु च ।
मूलमध्याग्रदेशेषु ईषत्सक्तांश्च निर्वपेत् ॥
गन्धादीन्निक्षिपेत्तूष्णीं तत आवाहयेद्द्विजान् ।
अन्यत्राप्येष एव स्यादयवादिरहितो विधिः ॥
दक्षिणाप्रवणे देशे दक्षिणाभिमुखस्य च ।
दक्षिणाग्रेषु दर्भेषु एषोऽन्यत्र विधिः स्मृतः ॥
अथाग्रभूमिमासिञ्चेत [सु]संप्रोक्षितमस्त्विति ।
शिवा आपः सन्त्विति च युग्मानेवोदकेन च ॥
सौमनस्यमस्त्विति च पुष्पदानमतः परम् ।
अक्षतं चारिष्टं चास्त्विति चाक्षतान् प्रतिपादयेत् ॥
अक्षय्योदकदानं च अर्घदानवदिष्यते ।
षष्ठ्यैव नित्यं तत्कुर्यान्न चतुर्थ्या कदाचन ॥
प्रार्थनासु प्रतिप्रोक्ते सर्वास्वेव द्विजोत्तमैः ।
पवित्रान्तर्हितान् पिण्डान् सिञ्चेदुत्तानपात्रकृत् ॥
युग्मानेव स्वस्ति वाच्य अङ्गुष्ठग्रहणं सदा ।
कृत्वा धुर्यस्य विप्रस्य प्रणम्याऽनुव्रजेत्ततः ॥

'तिलवद्यववत्तथा' इति, योऽन्यत्र तिलयुक्तोऽन्नप्रकरः क्रियते सोऽत्र यवयुक्तो यथा भवति तथा कर्तव्यः ।

'विपरीतकः' देवतीर्थादिना दानप्रकारेण । 'आद्यं' पुरुषम् । 'ईषत्सक्तान' ईषल्लग्नान् ॥

तथा [गोभिल; १, ५८-६८]

असकृद्यानि कर्माणि क्रियेरन् कर्मकारिभिः ।
प्रतिप्रयोगं नैव स्युर्मातरं श्राद्धमेव च ॥
आधाने होमयोश्चैव वैश्वदेवे तथैव च ।
बलिकर्मणि दर्शे च पौर्णमासे तथैव च ॥
नवयज्ञे च यज्ञे च वदन्त्येवं मनीषिणः ।
एकमेव भवेच्छ्राद्धमेतेषु न पृथक् पृथक् ॥
नाष्टकासु भवेच्छ्राद्धं न श्राद्धे श्राद्धमिष्यते ।
न सोष्यन्तीजातकर्मप्रोषितागतकर्मसु ॥
विवाहादिः कर्मगणो य उक्तो
गर्भाधानं शुश्रुम यः स चान्ते ।
विवाहादावेकमेवात्र कुर्या-
च्छ्राद्धं नादौ कर्मणः कर्मणः स्यात् ॥
प्रदोषे श्राद्धमेकं स्याद्गोनिष्कासप्रवेशयोः ।
न श्राद्धं युज्यते कर्तुं प्रथमे पुष्टिकर्मणि ॥
हलादियोगादिषु च षट्सु कुर्यात् पृथक् पृथक् ।
प्रतिप्रयोगमन्येषामादावेकत्र कारयेत् ॥
बृहत्पत्रक्षुद्रपशुस्वस्त्यर्थं परिविष्यतोः ।
सूर्येन्द्वोः कर्मणी ये तु तयोः श्राद्धं न विद्यते ॥
न दशाग्रन्थिकेनैव विषवद्दष्टकर्मणि ।
कृमिदष्टचिकित्सायां नैव शेषेषु विद्यते ॥
गणशः क्रियमाणेषु मातृभ्यः पूजनं सदा ।
सकृदेव भवेच्छ्राद्धमादौ न पृथगादिषु ॥
यत्र यत्र भवेच्छ्राद्धं तत्र तत्र च मातरः ।

'असकृद्यानि कर्माणि' इत्यस्यैव विषयविशेषे नियममाह—'आधाने होमयोश्चैव' इत्यादिना। तेन सोमयागादौ प्रतिप्रयोगं श्राद्धावृत्तिः। 'नवयज्ञ' आग्रयणम्। 'प्रोषितागतकर्मसु' प्रोष्य एत्य गृहाद्युपतिष्ठते 'पुत्रं दृष्ट्वा जपति' इत्यादिविहितम्। 'कर्मगणः' गृहप्रवेशचतुर्थीकर्मादिः। 'मातरः' पूजनीयाः इति शेषः॥

तथा

स्वपितृभ्यः पिता दद्यात सुतसंस्कारकर्मसु।
पिण्डानोद्वाहनात्तेषां तस्याभावे तु तत् क्रमात्॥

'आ उद्वाहनात्' विवाहपर्यन्तम्।

यमः

पितृणामप्यतिथयः श्राद्धकालेषु देवताः।
देवतानां च पितरो भवन्त्यतिथयः सदा॥

इति श्रीभट्टहृदयधरात्मजमहासन्धिविग्रहिकभट्टश्रीलक्ष्मीधरविरचिते कृत्यकल्पतरौ श्राद्धकाण्डे आभ्युदयिकपर्व॥

## ॥ ३२ ॥

## ॥ अथ जीवच्छ्राद्धविधिः ॥

तत्र ब्रह्मपुराणे[1]

देशकालधनश्रद्धाव्यवसायसमुत्थिते ।
जीविते सति जीवाय दद्याच्छ्राद्धं स्वयं नरः ॥
कृतोपवासः सुस्नातस्त्रयोदश्यां समाहितः ।
कर्तारमथ भोक्तारं विष्णुं सर्वेश्वरं यजेत् ॥
जले स्थलेऽम्बरे मूर्तौ कलशे पुष्करे रवौ ।
चन्द्राग्निगुरुगोविप्रमातापितृषु सर्वगम् ॥
सदक्षिणाश्च सतिलास्तिस्रस्तु जलधेनवः ।
निवेदयेत्पितृभ्यश्च तदग्रेषु समाहितः ॥
सोमाय त्वा पितृमते स्वधा नम इति स्मरन् ।
अग्नये कव्यवाहनाय स्वधा नम इति स्मरन् ॥
दक्षिणे तु निदध्याच्च तृतीयां दक्षिणायुताम् ।
यमायाऽङ्गिरसे वाऽथ स्वधा नम इति स्मरन् ॥
तयोर्मध्ये तु निक्षिप्य विप्रान् पश्चोपवेशयेत ।
आवाहनदिना पूर्वं विश्वान् देवान् प्रपूज्य च ॥
अहं वसुभ्यस्त्वां विप्र रुद्रेभ्यस्त्वामहं ततः ।
सूर्येभ्यस्त्वामहं विप्र भोजयामीति तान् वदेत् ॥
आवहनादिकं शेषं कुर्यात् स्वपितृकर्मवत् ।
सौम्यां धेनुं ततो दद्याद्वासवाय द्विजाय तु ॥

(1) आदित्यपुराणे—इति हेमाद्रिः, १७०४–१७०८; आदिपुराणे—इति वी. मि. श्रा; ३६८–३७१.

विश्वेभ्यश्चाथ देवेभ्यस्तिलपात्रं निवेदयेत् ।
स्वस्त्युदकमथाक्षय्यं जलं दत्वा च तान् द्विजान् ॥
विसर्जयेत् स्मरन् विष्णुं देवमष्टाक्षरं विभुम् ।
ततः कामकुलेशानं निशि नारायणं स्मरन् ॥
चतुर्दश्यां ततो गच्छेद्यथाप्राप्तां सरिद्वराम् ।
पूर्वेण विप्रः सौम्येन राजा वैश्यो परेण च ॥
दक्षिणेन तथा शूद्रो मार्गे च विकिरेद्यवान् ।
वस्त्राणि लोहखण्डानि जीवन्त इति संस्मरन् ॥
दक्षिणाभिमुखो वह्निं ज्वालयेत्तत्र च स्वयम् ।
पञ्चाशता कुशैर्ब्राह्मीं कृत्वा विप्रकृतिं दहेत् ॥
कृत्वा श्मशानिकं होमं पूर्णाहुत्यन्तमेव हि ।
निरग्निरथवा भूमिं यमं रुद्रं च संस्मरन् ॥
हुत्वा प्राधानिकस्थाने पश्चाद्दाहापयेच्च ताम् ।
श्रपयेच्चापरे वह्नौ मुद्गमिश्रं चरुं ततः ॥
तिलतण्डुलमिश्रं च द्वितीयं सपवित्रकम् ।
पूरयेत् कर्षुकांश्चात्र मधुक्षीरघृतोदकैः ॥
तदुपान्ते ततो मुद्गैः पात्राणि त्रीणि पूरयेत् ।
ॐ पृथिव्यै नमस्तुभ्यमिति चैकं निवेदयेत् ॥
ॐ यमाय नमश्चेति द्वितीयं तदनन्तरम् ।
ॐ नमश्चाथ रुद्राय श्मशानपतये तथा ॥
ततो दीप्तसमिद्धाग्निं भूमौ प्रकृतिदाहकम् ।
ॐ क्रव्यादमग्नितप्तायै भूम्यै नम इति स्मरन् ॥
क्षीराक्तं जलकुम्भं च विकिरेत्तत्प्रशान्तये ।
नाभिमात्रं ततस्तोयं प्रविश्य यमदिङ्मुखः ॥
सप्तभ्यो यमसंज्ञेभ्यो दद्यात्सप्त जलाञ्जलीन् ।
यमाय धर्मराजाय मृत्यवे चान्तकाय च ॥
वैवस्वताय कालाय सर्वप्राणहराय च ।
स्वधाकारनमस्कारप्रणवैः सह सप्तधा ॥

ॐ शिवाय च रुद्राय श्मशानपतये स्मरन् ।
लाजोदकाभ्यां पूर्णं तु कुम्भं च विकिरेद्भुवि ॥
याम्योन्मुखेषु दर्भेषु प्रदद्यादवनेजनम् ।
स्वधेति युक्तवाहाय रुद्रं नम इति स्मरन् ॥
अमुकामुकगोत्रैतत्तुभ्यमस्तु तिलोदकम् ।
प्रदद्याद्दश पिण्डांस्तु अर्घपुष्पसमन्वितान् ॥
धूपो दीपो बलिर्गन्धः सर्वेषामस्तु चाक्षयम् ।
दश पिण्डांस्ततो दत्वा विष्णोः सौम्यं मुखं स्मरेत् ॥
निष्क्रमणश्च तत्तोयं नाभिमात्रं प्रविश्य तु ।
प्रक्षिपेत् पूर्णकुम्भेन जलमध्ये पृथक् पृथक् ॥
प्रदद्यात्पञ्चपञ्चाशत् कुम्भानथ जलाञ्जलीन् ।
द्वारोपान्ते गृहे वाऽथ क्षीरं तोयं च निःक्षिपेत् ॥
जीवात्र स्नाहि दुग्धं च पिबेदं चाप्यनुस्मरन् ।
याम्योन्मुखेषु दर्भेषु स्वपेत् पश्चादुदङ्मुखः ॥
अथामावास्यायां कुर्याच्च जीवच्छ्राद्धमतः परम् ।
घृतान्नमांसदधिभिः पूरयेत्कर्षुकात्रयम् ॥
कुर्याच्च मासिकं मासि सपिण्डीकरणं तथा ।
आशौचान्ते ततः सर्वमात्मनो वा परस्य तु ॥
कुर्यादस्थिरतां ज्ञात्वा शक्त्याऽऽरोग्यधनायुषाम् ।

'दक्षिणेन' दक्षिणदिग्भागे अदूर एव । 'वासवाय' वसुभ्य उपवेशिताय ब्राह्मणाय । एवं रौद्राय इत्यपि । 'प्राधानिकस्थाने' प्रधानहोमस्थाने ॥

इति भट्टहृदयधरात्मजमहासन्धिविग्रहिकभट्टश्रीलक्ष्मीधरविरचिते
कृत्यकल्पतरौ श्राद्धकाण्डं समाप्तम्
॥ शुभं भूयात् ॥

# APPENDIX A

## INDEX OF SMṚTI-AUTHORS OR WORKS CITED

# APPENDIX B

## INDEX OF ITIHĀSAS AND PURĀṆAS CITED

# APPENDIX C

## INDEX OF VEDIC WORKS CITED

# APPENDIX D

## INDEX OF CITATIONS IN THE FOOTNOTES

# APPENDIX E

## INDEX OF HALF VERSES[1]



1. The sign * indicates a prose passage.

पृष्ठसंख्या.



पृष्ठसंख्या.

पृष्ठसंख्या.



पृष्ठसंख्या.

पृष्ठसंख्या.



पृष्ठसंख्या.

पृष्ठसंख्या.



पृष्ठसंख्या.

पृष्ठसंख्या.



पृष्ठसंख्या.

## ष



## स

इति
कृत्यकल्पतरौ
श्राद्धकाण्डे श्लोकार्धानुक्रमणिका
समाप्ता

Printed at the Madras Law Journal Press, Mylapore, Madras-4.